## सूचीपत्रम् ।

Approved by Government.

# नीतिपाठम्।

[ द्वितीयो भागः ]





श्रीश्यामाचरण-कविरत्नेन

सङ्कलितम्।

Victoria Press, Calcutta.

Registered under Act XX o 1847

# नीतिपाठम्।

( द्वितीयो भाग. )



श्रीश्यामाचरण-कविरत्नेन

सङ्कलितम्।

[ षष्ठ संस्करणम् ]

"श्रुतेन किं यो न च धर्म्ममाचरेत्।"

1916.



Price 3 Annas.



ईश्वरचन्द्र विद्यासागर।

# বিজ্ঞাপন।

নীতিপাঠের দ্বিতীয় ভাগ প্রকাশিত হইল। উচ্চশ্রেণী ইংরাজী বিদ্যালয়ের তৃতীয় শ্রেণীর ছাত্রগণের পাঠোপযোগী নীতিগর্ভ কতিপয় প্রবন্ধ মহাভারতাদি প্রাচীন গ্রন্থ হইতে সঙ্কলন করিয়া ইহাতে সন্নিবেশিত হইয়াছে। এবার নূতন সংস্করণে টেক্সটবুককমিটীর উপদেশে, এক বৎসরে যাহাতে সম্পূর্ণ পুস্তকের পাঠ শেষ হইতে পারে, তজ্জন্য কয়েকটী প্রবন্ধ পরিত্যাগ করিয়া পুস্তকের আকার অপেক্ষাকৃত খর্ব্ব করা গেল, এবং মূল্যও স্বল্প করা হইল।

শিবপুর, হাওড়া।
১১ই মার্চ্চ, ১৯০৩। } শ্রীশ্যামাচরণ শর্ম্মা।

# नीतिपाठम्।

[ द्वितीयो भागः ]

## गुरुभक्तिः।

( आरुणे )

आसीत् कश्चित् ऋषिः आयोदः धौम्यो नाम। तस्य शिष्यास्त्रयो बभूवुः—उपमन्युः आरुणिः वेदश्चेति। स एकं शिष्यम् आरुणिं प्रेरयामास—"गच्छ, केदारखण्डं बधान" इति। १

स उपाध्यायेन सन्दिष्टः आरुणिः गत्वा, तत् केदारखण्डं बद्धुं न अशकत्। क्लिश्यमानः अपश्यत् उपायम्,—स तत्र संविवेश केदारखण्डे। तथा शयाने च तस्मिन्, तत् उदकं तस्थौ। २

ततः कदाचित् उपाध्यायः आयोदो धौम्यः शिष्यान् अपृच्छत् —"क्व आरुणिर्गतः ?" ते तं प्रत्यूचुः—"भगवन्, त्वयैव प्रेषितः—गच्छ केदारखण्डं बधान इति"। स एवमुक्तः तान् प्रत्युवाच—"तस्मात् तत्र सर्व्वे वयं गच्छामः यत्र स गतः"। ३

स तत्र गत्वा, तस्य आह्वानाय शब्दं चकार—"भो आरुणे!

कासि वत्स ? एहि" इति। तच्छ्रुत्वा आरुणिः उपाध्यायवाक्यं, तस्मात् केदारखण्डात् सहसा उत्थाय, तम् उपाध्यायम् उपतस्थौ, प्रोवाच च एनम्—"अयम् अस्मि; अत्र केदारखण्डे निःसरत् उदकम् अवारणीयं संरोद्धुं संविष्टः। भगवच्छब्दं श्रुत्वैव, सहसा विदार्य्य केदारखण्डं, भगवन्तम् उपस्थितः। ततः अभिवादये भगवन्तम्, आज्ञापयतु भवान्, कम् अर्थं करवाणि"। ४

स एवमुक्तः उपाध्यायः प्रत्युवाच—"यस्मात् भवान् केदार-खण्डं विदार्य्य उत्थितः, तस्मात् नाम्ना उद्दालक एव भविष्यति। यस्माच्च त्वया मद्वचनम् अनुष्ठितम्, तस्मात् श्रेयः अवाप्स्यसि। सर्व्वे च ते वेदाः प्रतिभास्यन्ति, सर्व्वाणि च धर्म्मशास्त्राणि" इति। ५

स एवम् उक्तः उपाध्यायेन, इष्टं देशं जगाम। ६

---

( उपमन्यौ )

अथ अपरः शिष्यः तस्यैव आयोद-धौम्यस्य उपमन्युर्नाम। तं च उपाध्यायः प्रेषयामास—"वत्स उपमन्यो, गाः रक्ष" इति। स उपाध्याय-वचनात् अरक्षत् गाः। १

स च अहनि गा रक्षित्वा, दिवसक्षये गुरुगृहम् आगत्य, उपाध्यायस्य अग्रतः स्थित्वा नमश्चक्रे। तम् उपाध्यायः पीवानम् अपश्यत्, उवाच च एनम्—"वत्स उपमन्यो! केन वृत्तिं कल्पयसि? पीवा असि दृढ़म्"। स उपाध्यायं प्रत्युवाच—"भोः, भैक्ष्येण वृत्तिं कल्पयामि"। २

तम् उपाध्यायः प्रत्युवाच—"मयि अनिवेद्य, भैक्ष्यं न उपयोक्तव्यम्"। स तथा इत्युक्त्वा, भैक्ष्यं चरित्वा, उपाध्यायाय न्यवेदयत्। स तस्मात् उपाध्यायः सर्व्वमेव भैक्ष्यम् अगृह्णात्। स पुनः अरक्षत् गाः। अहनि रक्षित्वा, निशामुखे गुरुकुलम् आगम्य, गुरोः अग्रतः स्थित्वा नमश्चक्रे। ३

तम् उपाध्यायः तथापि पीवान-मेव दृष्ट्वा उवाच—"वत्स उपमन्यो! सर्व्वं ते भैक्ष्यं गृह्णामि, केन इदानीं वृत्तिं कल्पयसि?" स एवम् उक्तः तम् उपाध्यायं प्रत्युवाच—"भगवते निवेद्य पूर्व्वम्, अपरं चरामि, तेन वृत्तिं कल्पयामि"। ४

तम् उपाध्यायः प्रत्युवाच—"नैषा न्याय्या वृत्तिः, यतः अन्येषामपि भैक्ष्योपजीविना वृत्त्युपरोधं करोषि। एवं वर्त्तमानो लुब्धोऽसि"। स तथा इत्युक्त्वा, गाः अरक्षत्। रक्षित्वा च, पुनः

उपाध्यायगृहम् आगम्य, उपाध्यायस्य अग्रतः स्थित्वा नमश्चक्रे । ५

तम् उपाध्यायः तथापि पीवानमेव दृष्ट्वा पुनरुवाच—"वत्स उपमन्यो । अहं ते सर्व्वं भैक्ष्यं गृह्णामि, न च अन्यत् चरसि, पीवा असि भृशं, केन वृत्तिं कल्पयसि ?" स एवम् उक्तः उपाध्यायं प्रत्युवाच—"भोः, एतासां गवां पयसा वृत्तिं कल्पयामि" । ६

तम् उवाच उपाध्यायः—"नैतत् न्याय्यम् ; पय उपयोक्तुं भवतः मया न अभ्यनुज्ञातम्" । स तथा इति प्रतिज्ञाय, गा रक्षित्वा, पुन उपाध्यायगृहम् एत्य, गुरोरग्रतः स्थित्वा नमश्चक्रे । ७

तम् उपाध्यायः पीवान-मेव दृष्ट्वा उवाच—"वत्स उपमन्यो ! भैक्ष्यं न अश्नासि, न च अन्यत् चरसि, पयो न पिबसि ; भृशं पीवा असि । केन इदानीं वृत्तिं कल्पयसि ?" । स एवम् उक्तः उपाध्यायं प्रत्युवाच—"भोः, फेनं पिबामि, यम् इमे वत्साः मातृणां स्तनान् पिबन्तः उद्गिरन्ति" । ८

तम् उपाध्यायः प्रत्युवाच,—"एते गुणवन्तो वत्साः त्वदनुकम्पया प्रभूततरं फेनम् उद्गिरन्ति । तत् एषामपि वत्सानां वृत्त्युपरोधं करोषि । फेनम् अपि भवान् न पातुम् अर्हति" । ९

स तथा इति प्रतिश्रुत्य पुनः अरक्षत् गाः । तथा प्रतिषिद्धो भैक्ष्यं न अश्नाति, न च अन्यत् चरति, पयो न पिबति, फेनं न उपयुङ्क्ते । १०

अथ स कदाचित् अरण्ये क्षुधार्त्तः अर्कपत्राणि अभक्षयत्। स तैः अर्कपत्रैः भक्षितैः क्षारतिक्तकटुरूक्षैः चक्षुषि उपहतः अन्धो बभूव। ततः सः अन्धोऽपि परिभ्रमन् कूपे अपतत्। ११

अथ तस्मिन् अनागच्छति, सूर्य्ये च अस्ताचलावलम्बिनि, उपाध्यायः शिष्यान् अवोचत्—"न आयाति उपमन्युः?"। ते ऊचुः—"वनं गतो गाः रक्षितुम्" इति। तान् आह उपाध्यायः—"मया उपमन्युः सर्व्वतः प्रतिषिद्धः, स नियतं कुपितः, अतो न आगच्छति चिरं, ततः सः अन्वेष्यः"। १२

एवम् उक्त्वा, शिष्यैः सार्द्धम् अरण्यं गत्वा, तस्य आह्वानाय शब्दं चकार—"भो उपमन्यो! क्वासि? वत्स, एहि" इति। १३

स उपाध्याय-वचनं श्रुत्वा प्रत्युवाच उच्चैः—"अहम् अस्मिन् कूपे पतितोऽस्मि"। तम् उपाध्यायः प्रत्युवाच—"कथं त्वम् अस्मिन् कूपे पतितः?"। स उपाध्यायं प्रत्युवाच—"अर्कपत्राणि भक्षयित्वा अन्धीभूतोऽस्मि, अतः कूपे पतितः"। १४

तम् उपाध्यायः प्रत्युवाच—"अश्विनौ स्तुहि। तौ देव-भिषजौ त्वा चक्षुष्मन्तं कर्त्तारौ"। १५

स एवम् उक्तः उपाध्यायेन उपमन्युः स्तोतुम् उपचक्रमे देवौ अश्विनौ। तेन अभिष्टुतौ अश्विनौ आजग्मतुः, ऊचतुश्च एनम्—"प्रीतौ स्वः, एष ते अपूपः, अशान एनम्"। १६

स एवम् उक्तः प्रत्युवाच—"गुरवे अनिवेद्य, नाहमेतम् अपूपम् उपयोक्तुम् उत्सहे"। ततस्तम् अश्विनौ ऊचतुः,—

"आवाभ्यां पुरस्तात् भवतः उपाध्यायेन एवमेव अभिष्टुताभ्याम् अपूपो दत्तः, उपयुक्तः स तेन, अनिवेद्य गुरवे, त्वमपि तथैव कुरुष्व, यथा कृतं ते उपाध्यायेन। १७

स एवम् उक्तः प्रत्युवाच—"प्रत्यनुनये भवन्तौ अश्विनौ। न उत्सहे अहम्, अनिवेद्य गुरवे, अपूपम् एनम् उपयोक्तुम्" ।१८

तम् अश्विनौ ऊचतुः—"प्रीतौ स्वः तव अनया गुरुभक्त्या। उपाध्यायस्य ते कार्ष्णायसाः दन्ताः, भवतो हिरण्मयाः दन्ताः भविष्यन्ति। चक्षुष्मांश्च भविष्यसि, श्रेयश्च अवाप्स्यसि"। १९

स एवम् उक्तः अश्विभ्यां, लब्धचक्षुः उपाध्यायसकाशम् आगम्य, उपाध्यायम् अभ्यवादयत, सर्व्वं च आचचक्षे। स च अस्य प्रीतिमान् बभूव, आह च एनम—"यथा अश्विनौ ऊचतुः, तथा त्वं श्रेयः अवाप्स्यसि। सर्व्वे च ते वेदाः प्रतिभास्यन्ति, सर्व्वाणि च धर्म्मशास्त्राणि" इति।—एषा तस्यापि परीक्षा उपमन्योः। २०

---

( वेदस्य )

अथ अपरः शिष्यः, तस्यैव आयोद-धौम्यस्य वेदो नाम। तम् उपाध्यायः समादिदेश—"वत्स वेद, इह आस्यतां तावत् मम गृहे कञ्चित् कालं, शुश्रूषुणा च भवितव्यं, श्रेयस्ते भविष्यति।" १

स तथा इत्युक्त्वा, गुरुकुले दीर्घकालं गुरुशुश्रूषणपरो न्यवसत्। गौरिव नित्यं गुरुणा धूर्षु नियोज्यमानः, शीतोष्ण-क्षुत्तृष्णा-दुःखसहः, सर्वत्र अप्रतिकूलः आसीत्। २

तस्य महता कालेन गुरुः परितोषं जगाम। तत्परि-तोषाच्च स श्रेयः सर्वज्ञताञ्च अवाप।—एषा तस्यापि परीक्षा वेदस्य। ३

---

## गुरुप्रणाममन्त्रः ।

अखण्डमण्डलाकारं व्याप्तं येन चराचरं ।
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥
अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥

---

# विद्या-माहात्म्यम् ।

अजरामरवत् प्राज्ञो विद्यामर्थञ्च चिन्तयेत् ।
गृहीत इव केशेषु मृत्युना धर्म्म-माचरेत् ॥ १

सर्व्वद्रव्येषु विद्यैव द्रव्यमाहु-रनुत्तमम् ।
अहार्य्यत्वा-दनर्घत्वा-दक्षयत्वाच्च सर्व्वथा ॥ २

सङ्गमयति विद्यैव नीचगापि नरं सरित् ।
समुद्रमिव दुर्द्धर्षं नृपं भाग्य-मतः परम् ॥ ३

विद्या ददाति विनयं, विनयाद् याति पात्रताम् ।
पात्रत्वाद्धन-माप्नोति, धनाद्धर्म्मं ततः सुखम् ॥ ४

विद्या शस्त्रञ्च शास्त्रञ्च, द्वे विद्ये प्रतिपत्तये ।
आद्या हास्याय वृद्धत्वे, द्वितीयाद्रियते सदा ॥ ५

पण्डिते च गुणाः सर्व्वे मूर्खे दोषाहि केवलम् ।
तस्मान्मूर्खसहस्रेभ्यः प्राज्ञ एको विशिष्यते ॥ ६

विद्वत्वं च नृपत्वं च नैव तुल्यं कदाचन ।
स्वदेशे पूज्यते राजा विद्वान् सर्व्वत्र पूज्यते ॥ ७

नास्ति विद्यासमं चक्षुर्नास्ति सत्यसमं तपः ।
नास्ति रागसमं दुःखं नास्ति त्यागसमं सुखम् ॥ ८

---

# पण्डित-मूर्खाः

कस्मिंश्चिदधिष्ठाने चत्वारो ब्राह्मणाः परस्परं मित्रत्वमापन्ना वसन्ति स्म। बाल्यकाले तेषां मतिरजायत—भोः देशान्तरं गत्वा विद्याया उपार्ज्जनं क्रियताम् इति। अथान्यस्मिन् दिवसे ते परस्परं निश्चयं कृत्वा, विद्योपार्जनार्थं कान्यकुब्जं गताः। १

तत्र च विद्यामठं गत्वा पठन्ति स्म। एवं द्वादशाब्दान् यावत् एकचित्ततया पठन्तः सर्व्वविद्याकुशलास्ते सञ्जाताः। ततस्तैश्चतुर्भिर्मिलित्वा उक्तम्—"वयं सर्व्वविद्यापारं गताः। तत् उपाध्याय-मनुज्ञाप्य स्वदेशं गच्छामः"। "तथैव क्रियताम्" इत्युक्त्वा, ब्राह्मणा उपाध्यायस्य अनुज्ञा लब्ध्वा, पुस्तकानि नीत्वा प्रचलिताः। २

अथ यावत्ते किञ्चिन्मार्गं यान्ति, तावत् द्वौ पन्थानौ समायातौ। तत्र उपविष्टाः सर्व्वे। तत एक प्रोवाच—"केन मार्गेण गच्छामः?"। एतस्मिन् समये तस्मिन् पत्तने कश्चित् वणिक् मृतः। तस्य दाहार्थं महाजना गच्छन्ति स्म। ततश्चतुर्णां मध्ये एकेन पुस्तक-मुद्घाट्य उक्तम्—

"महाजनो येन गतः स पन्था।" ३

अथ ते पण्डिता यावत् महाजन-मार्गेण यान्ति तावत्

तैः रासभः कश्चित् तत्र श्मशाने दृष्टः। अथ द्वितीयेन पुस्तक-मुद्घाट्य उक्तम् । ४ ।—

"उत्सवे व्यसने चैव दुर्भिक्षे राष्ट्रविप्लवे ।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धव ॥" ५

तदहो। अय-मस्मदीयो बान्धवः। ततः कश्चित्तस्य ग्रीवायां लगति स्म, कोऽपि पादौ प्रक्षालयति स्म । ६

अथ यावत् ते पण्डिताः दिशा-मवलोकनं कुर्वन्ति, तावत् तैः कश्चित् उष्ट्रा दृष्टः। उक्तञ्च—"एतत् किम्?" ततः तृतीयेन पुस्तक-मुद्घाट्य उक्तम् ।७

"धर्म्मस्य त्वरिता गतिः ।"

एष धर्म्मस्तावत् । चतुर्थेनोक्तम्—

"इष्टं धर्म्मेण योजयेत् ।" ८

अथ तैः स रासभः उष्ट्रग्रीवायां बद्धः। ततः केनचित् रजकस्याग्रे कथितम्। अथ रजकस्तेषां पण्डितमूर्खाणां प्रहार-करणाय यावत् समायातः, तावत् ते प्रनष्टाः । ९

अथ ते यावत् अग्रे किञ्चिन्मार्गं यान्ति, तावत् तैः काचि-न्नदी समासादिता। ततस्तस्या जलमध्ये पलाशपत्र-मायात् दृष्ट्वा पण्डितेन एकेन उक्तम्। १०

"आगमिष्यति यत्पत्रं तदस्मास्तारयिष्यति ।" ११

एतत् कथयित्वा तत्पत्रस्योपरि पतितः स यावन्नद्या नीयते,

तावत् तं नीयमान-मवलोक्य अन्येन पण्डितेन तस्य केशान्तं गृहीत्वा उक्तम्। १२

"सर्व्वनाशे समुत्पन्ने अर्द्धं त्यजति पण्डित।
अर्द्धेन कुरुते कार्य्यं सर्व्वनाशो हि दुःसह॥" १३

इत्युक्त्वा तेन तस्य शिरश्छेदो विहितः। १४

---

## मूर्खता-दोषः।

कोऽर्थः पुत्रेण जातेन यो न विद्वान् न धार्म्मिकः।
काणेन चक्षुषा किं वा चक्षुःपीडैव केवलम्॥ १
स जातो येन जातेन याति वंशः समुन्नतिम्।
परिवर्त्तिनि संसारे मृतः को वा न जायते॥ २
अजात-मृत-मूर्खाणां वरमाद्यौ न चान्तिमः।
सकृद्दुःखकरा-वाद्या-वन्तिमस्तु पदे पदे॥ ३
काव्यशास्त्र-विनोदेन कालो गच्छति धीमताम्।
व्यसनेन च मूर्खाणां निद्रया कलहेन च॥ ४

---

## प्रभुभक्तिः ।

( वीरवरस्य )

आसीत् सकल-राजलक्षणोपेतः सार्व्वभौमः शूद्रको नाम राजा। एकदासौ अमात्यगण-परिवृतः परिषदमास्थितः। तदैको राजपुत्रः पुत्रभार्य्यासमेतो देशान्तरा-दाजगाम, वर्त्तनार्थी च दौवारिक-मब्रवीत्—"भो दौवारिक, मां सवेहि राजपुत्रम्। अहं पुत्रभार्य्यासहायः शूद्रकमहाराजस्य यशः श्रुत्वा वर्त्तनार्थी समागतः। मम वृत्तान्तं राज्ञे विज्ञापय"। श्रुत्वैतत् प्रतीहारी राजानं विज्ञाप्य आगन्तुक-मुपनिनाय। १

तमवलोक्य राजा पप्रच्छ—"को भवान्? किमर्थमिहागतः?" इति पृष्टः स ब्रूते स्म—"देव, वीरवर-नामा क्षत्रियोऽहम् भवत्-सेवाकाङ्क्षी समागतोऽस्मि"। राजाऽवदत,—"किं जीवनं कर्त्तव्यं, तद्वद"। वीरवरेणोक्तं,—"प्रत्यहं सुवर्ण-शतपञ्चकं ददातु देवः"। राजाऽब्रवीत्—"अहो! अत्र बहवो गुणवन्तः सन्ति, केषामपि एतावज्जीवनं न विद्यते"। तत् श्रुत्वा वीरवरो नृपति-मभिवाद्य चलितः। २

ततः सान्धिविग्रहिकेणोक्तं—"देव, एतेन मा कातरो भव, दिवस-कतिपयम् एतावज्जीवनं दत्त्वा वीरवरः परीक्ष्यताम्।

बहुल-धनमपि विनष्टं न भविष्यति'। ततो राज्ञा पुनरानीय यथाभिलषित-वर्त्तनं दत्त्वा स्थापितोऽसौ वीरवरो वर्त्तन-धनस्यार्द्धं ब्राह्मणेभ्यो दत्त्वा, चतुर्थांशम् अन्धपङ्गु-जनेभ्यो दत्त्वा, अवशिष्ट-चतुर्थांशेन आत्मानं वर्द्धयति स्म। एवं स राज-सेवां कुर्व्वन्नासीत्। ३

अथैकदा दक्षिणस्यां दिशि रात्रौ एका स्त्री करुण-स्वरेण रोदिति स्म। तत् श्रुत्वा राजाऽवदत्—"द्वारिकस्तिष्ठति?" वीरवरेणोक्तं—"देव, अहमस्मि"। नृपेणोक्तं—"वीरवर! का रोदिति, तां निश्चित्य मां ज्ञापय"। ४

ततोऽसौ गतः। राजा च तस्य पश्चात् अनुपलक्षितो जगाम। वीरवरस्तत्र गत्वा तां रुदतीमालोक्य अब्रवीत्,—"मातः! भवती किमर्थम् एकाकिनी रोदिति"? सा तु यत्नेन पृष्टा ब्रूते स्म—"वत्स, अहं शूद्रकस्य लक्ष्मीः। स महात्मा प्रातःकाले नाशं गमिष्यति, तदहमिदानीं कुत्र स्थास्यामि इति रोदिमि"। तत् श्रुत्वा वीरवरेणोक्तं—"मातः, भवती यथा चिरस्थायिनी, राजा च चिरजीवी भवति, तदुपायं वदतु भवती, अहं तावत् करोमि"। लक्ष्मीः ब्रूते स्म—"वत्स! तत् दुष्करं कर्म्म कः करिष्यति?"। ५

वीरवरेणोक्तं—"मया तत् अशक्यमपि कर्त्तव्यमिति वदतु भवती"। लक्ष्मी. ब्रूते स्म—"यदि सुलक्षणं कुमारं समानीय तन्मातृभगिन्यौ तच्चरणौ स्वेच्छया दध्याताम्, स्वयमपि पिता तं कात्यायन्यै बलिं दद्यात्, तदा राज्ञः शुभं भविष्यति।

केशाकर्षण-शिरश्छेदं यदि पुत्रः स्वीकरोति, तदैव, नान्यथा"। इति निगद्य लक्ष्मी-रन्तर्हिता बभूव। ६

वीरवरः श्रुत्वा, तत् स्वगृहमागत्य, पत्न्यां पुत्रे दुहितरि च सर्व्व-मकथयत्। तत् श्रुत्वा पत्नी वदति स्म—"यद्येतत् दुष्करं कर्म्म न कर्त्तव्यं, तदा परलोके निस्तारः कथं भविष्यति ?" तत्पुत्रः शक्तिवरोऽवदत्—"तात। धन्योऽहं, यन्मम मरणे राजा चिरजीवी, राज्यस्य च निस्तारो भविष्यति"। दुहिता चाभ्यनन्दत्। राजा सुगुप्तं सर्व्वं श्रुत्वा अनुपलक्षित-स्तिष्ठति स्म। वीरवरः सपरिवारस्तत्र गत्वा तेनैव विधिना राज्ञो विपत्तिक्षयहेतो. स्वपुत्रं भगवत्यै बलिं ददौ, तच्छोकं परि-हर्त्तुं च खड्गेन आत्मनः शिरश्चिच्छेद। गुरुतरशोकेन वीर-वरस्य पत्नी दुहिता चापि तथैव चक्रतुः। ७

राजा सर्व्व-मेत-दवलोक्य सपरिवारस्य वीरवरस्य सात्त्वि-कत्व-मधिगम्य स्वशिरश्छेत्तु-मुपचक्रमे। एतस्मिन् समये आकाशवाणी बभूव—"राजन्! त्वम् आत्मबलिं न दद्याः। त्वयि कात्यायनी प्रसन्नाऽभवत्"। राजा वदति स्म—"मातः! यद्येवं, तदा वीरवरः सपरिवारो जीवतु"। ८

ततो वीरवरे सपरिवारे जीविते सति, राजा अनुपलक्षितः स्वगृह-मागतः। प्राप्तजीवनो वीरवरः पत्नीं पुत्रं दुहितरं च स्वगृहे संस्थाप्य नृपद्वारमागमत्। तमायात-मवलोक्य राजाऽवदत्—"वीरवर! कुत्र गत्वा स्थितं भवता, का रोदिति स्म, तत् कथय"। इति पृष्टो वीरवरो ब्रूते स्म—"देव, एका

स्त्री दुःखिनी रोदिति स्म, तां निसार्य्य आगतोऽस्मि"।
राज्ञोक्तं—"वत्स, स्वगृहं गच्छ"। ९

अथ परदिने राजा सर्व्वामात्यान् समाहूय, वीरवरस्य सपरिवारस्य सात्त्विकत्वं निगदितवान्। तत् श्रुत्वा सर्व्वे विस्मिता बभूवुः। ततो वीरवर-प्रभावात् राजा चिरजीवी सार्व्वभौमश्च बभूव। वीरवरश्च बहुतर-हय-हस्ति-धन-जन-मणि-रत्नानि दत्त्वा शेखरदेशे राजानं कृतवान्। १०

---

# पितृभक्तिः । (१)

( रामस्य )

विलपन्तीं तथा दीनां कौशल्यां जननीं ततः ।
उवाच रामो धर्म्मात्मा वचनं धर्म्मसंहितम् ॥ १
नास्ति शक्तिः पितुर्वाक्यं समतिक्रमितुं मम ।
प्रसादये (२) त्वां शिरसा गन्तु-मिच्छाम्यहं वनम् ॥ २
नाहं धर्म्म-मपूर्व्वं ते प्रतिकूलं प्रवर्त्तये ।
पूर्व्वैं-रय-मभिप्रेतो गतो मार्गोऽनुगम्यते ॥ ३
तदेतत्तु मया कार्य्यं नियतं वचनं पितुः ।
पितुर्हि वचनं कुर्व्वन् न कश्चि-दवहीयते ॥ ४
तामेव-मुक्त्वा जननीं लक्ष्मणं पुन-रब्रवीत् ।
वाक्यं वाक्यविदां श्रेष्ठः श्रेष्ठः सर्व्वधनुष्मताम् ॥ ५
तव लक्ष्मण जानामि मयि स्नेह-मनुत्तमम् ।
विक्रमञ्चैव सत्त्वञ्च तेजश्च सुदुरासदम् ॥ ६
धर्म्मो हि परमो लोके धर्म्मे सत्यं प्रतिष्ठितम् ।
धर्म्मसंश्रित-मेतत्तु पितुर्व्वचन-मुत्तमम् ॥ ७

---

( १ ) कैकेयीमुखात् पितुरादेश-मुपश्रुत्य वनगमनाय कृतनिश्चयः सन् रामः मातर-मामन्त्रयितुं लक्ष्मणेन सह तद्भवनं जगाम । माता तु सर्व्वमुपश्रुत्य, पितृवचन मनादृत्य राज्यग्रहणाय तमभ्यर्थितवती । लक्ष्मणोऽपि तस्या वचन-मनुमोदितवान् ।

( २ ) प्रसादये—प्रसादयामि ( आर्षः ) ।

संश्रुत्य च पितुर्वाक्यं मातुर्वा प्रियदर्शन।
न कर्त्तव्यं वृथा वीर धर्म्मं माश्रित्य तिष्ठता॥ ८
सोऽहं न शक्ष्यामि पितुर्नियोग-मतिवर्त्तितुम्।
पितुर्हि वचनाद्वीर कैकेय्याहं प्रणोदित.॥ ९
तदेता विसृजानार्य्या क्षत्रधर्म्माश्रितां मतिम्।
धर्म्ममाश्रय मा तैक्ष्ण्यं मद्बुद्धि-रनुगम्यताम्॥ १०
तमेवमुक्त्वा सौहार्दाद् भ्रातरं लक्ष्मणाग्रजः।
उवाच भूयः कौसल्यां प्राञ्जलिः शिरसा नत.॥ ११
अनुमन्यस्व मा देवि गमिष्यन्त-मितो वनम्।
शापितासि मम प्राणैः कुरु स्वस्त्ययनानि मे॥ १२
शोकः सन्धार्य्यतां मातर्हृदये साधु मा शुचः।
वनवासा-दिहैष्यामि पुन कृत्वा पितुर्वचः॥ १३
त्वया मया च वैदेह्या लक्ष्मणेन सुमित्रया।
पितुर्नियोगे स्थातव्य-मेष धर्म्मः सनातन॥ १४
अम्ब संहृत्य सम्भारान् दुःखं हृदि निगृह्य च।
वनवास-कृता बुद्धि-र्मम धर्म्म्योऽनुवर्त्यताम्॥ १५
भक्त्या रामस्य सौमित्रिं संरब्धं पितरं प्रति।
श्लक्ष्णैः सानुनयैर्वाक्यैः शमयामास राघवः॥ १६
पुण्यशीलो हि धर्म्मात्मा सत्यधर्म्म-परायणः।
पार्थिवो नानृतं कर्त्तुं न्याय्यो लोकगुरुस्त्वया॥ १७
सत्यप्रतिज्ञं कृत्वा तु पितरं धर्म्मवत्सलम्।
पुण्यां कीर्त्ति-मवाप्स्यामि प्रेत्य चेह च शाश्वतीम्॥ १८

यदि त्वस्ति मयि स्नेहो भक्तिर्वा तव लक्ष्मण ।
ततो निवर्त्तयैतां त्वं पापबुद्धिं समुत्थिताम् ॥ १९
धर्म्मात्मनः प्रभवतः कृत्यज्ञस्य महात्मनः ।
पितु-रस्याप्रियं कर्त्तुं नेच्छामि मनसाप्यहम् ॥ २०
यदिच्छसि प्रियं कर्त्तुं मम नित्य-मभीप्सितम् ।
ततो मयि गते भक्त्या शुश्रूष्यो नृपतिस्त्वया ।
निर्व्यलोकेन मनसा प्रत्यक्षं दैवतं यथा ॥ २१
यथा यथा न तप्येयु-र्वनवासं गते मयि ।
मातरश्चाविशेषेण शुश्रूष्याः सर्व्वशस्त्वया ॥ २२
भरतश्चापि धर्म्मात्मा द्रष्टव्योऽहमिव त्वया ।
परिपाल्यश्च यत्नेन मम प्रियचिकीर्षुणा ॥ २३

---

## पितृप्रणाममन्त्रः ।

पिता धर्म्मः पिता स्वर्गः पिता हि परमं तपः ।
पितरि प्रीतिमापन्ने प्रियन्ते सर्व्वदेवताः ॥

---

# भ्रातृ-वात्सल्यम् ।

( लक्ष्मणस्य )

इत्युक्तवचनं रामं बभाषे लक्ष्मणस्तदा ।
अप्रकम्प्यं स्थितं धर्म्मे पुरन्दर-मिवानुजः ॥ १
लोकनाथ गतिर्या ते सा ममापि भविष्यति ।
वने वत्स्याम्यहमपि शुश्रूषा-निरतस्तव ॥ २
त्वया त्यक्ता-महमपि परित्यक्ष्ये (१) पुरीमिमाम् ।
त्वदृते न हि मे वस्तुं स्वर्गेऽपि रमते मनः ॥ ३
यद्यस्ति मयि ते स्नेहो भक्तोऽयं प्रति मामिति ।
तन्न मामनुगच्छन्तं निवर्त्तयितु-मर्हसि ॥ ४
वने निवसतस्तेऽहं नानावन-विचारिणः ।
आहरिष्यामि पुष्पाणि मूलानि च फलानि च ॥ ५
सहायस्ते भविष्यामि दुर्गेषु विषमेषु च ।
आज्ञाकरस्ते भृत्योऽहं भविष्यामि महावने ॥ ६
सर्व्वभावानुरक्तं मा न परित्यक्तुमर्हसि ।
अनुगन्तु कृतमतिं कृतज्ञं शरणागतम् । ७
न निवर्त्तयितव्योऽहं सर्व्वथा रघुनन्दन ।
न हि राम त्वया त्यक्तो जीवेयमिति मे मतिः ॥ ८

---

(१) परित्यक्ष्ये—परित्यक्ष्यामि ( आर्ष ) ।

न निवर्त्तयितुं शक्या बुद्धिरेषा मम स्थिरा ।
स भवाननुजानातु ममानुगमनं वने ॥ ९

सोऽनुनीतो बहुविधं लक्ष्मणेन यशस्विना ।
वाढ़मित्यब्रवीद्रामो लक्ष्मणं भ्रातृवत्सलम् ॥ १०

सह यास्यामि सौमित्रे त्वयाहं गहनं वनम् ।
भवान् हि परमो बन्धुः सखा भक्तः प्रियश्च मे ॥ ११

---

## राजभक्तिः ।

युधिष्ठिर उवाच ।

किमाहुर्दैवतं विप्रा राजानं भरतर्षभ ।
मनुष्याणा-मधिपतिं तन्मे ब्रूहि पितामह ॥ १

भीष्म उवाच ।

अत्राप्युदाहरन्तीम-मितिहासं पुरातनम् ।
बृहस्पतिं वसुमना यथा पप्रच्छ भारत ॥ २

राजा वसुमना नाम कौसल्यो धीमतां वरः ॥ ३
महर्षिं किल पप्रच्छ कृतप्रज्ञं बृहस्पतिम् ॥ ४

---

(१) विप्रा मनुष्याणाम् अधिपतिं राजानं किं (कथं) दैवतम् (देवताम्) आहुः—इत्यन्वय । (३) कौसल्य—कोसलाधिपति ।

(४) कृतप्रज्ञं—शिक्षितमतिं, विद्वांसमिति यावत् ।

वसुमना उवाच।

केन भूतानि वर्द्धन्ते क्षयं गच्छन्ति केन वा।
कमर्च्चन्तो महाप्राज्ञ सुखमव्यय-माप्नुयुः॥ ५

एवं पृष्टो महाप्राज्ञः कौसल्येनामितौजसा।
राजसत्कार-मव्यग्रं शशंसास्मै बृहस्पतिः॥ ६

बृहस्पतिरुवाच।

राजमूलो महाप्राज्ञ धर्म्मो लोकस्य लक्ष्यते।
प्रजा राजभयादेव न खादन्ति परस्परम्॥ ७

यथा ह्यनुदये राजन् भूतानि शशिसूर्य्ययोः।
अन्धे तमसि मज्जेयु-रपश्यन्तः परस्परम्॥ ८

एवमेव विना राज्ञा विनश्येयु-रिमाः प्रजाः।
अन्धे तमसि मज्जेयु-रगोपाः पशवो यथा॥ ९

ममेदमिति लोकेऽस्मिन् न भवेत् सम्परिग्रहः।
विष्वग्लोपः प्रवर्त्तेत यदि राजा न पालयेत्॥ १०

---

(५) अर्च्चन्तः—पूजयन्तः। अव्ययम्—अक्षयम्।

(६) अमितौजसा—अतितेजस्विना। राजसत्कारम्—राजसम्माननम्, राजभक्तिम्। अव्यग्रम्—अनाकुलं यथा स्यात् तथा, धीरगम्भीरभावेन इत्यर्थः। शशंस—कथयामास।

(७) लोकस्य धर्म्मः राजमूलः (राजा एव मूलं यस्य सः), राजा लोकस्य धर्म्मं रक्षतीत्यर्थः। खादन्ति—हिंसन्ति।

(९) एवमेव राज्ञा विना इमाः प्रजाः, अगोपाः (रक्षकहीनाः) पशवः यथा (गवादय इव), अन्धे तमसि मज्जेयुः, ततो विनश्येयुः—इत्यन्वयः।

(१०) इदं (धनादिकं वस्तु) मम (मदीयम्) इति सम्परिग्रहः (सम्प्रत्ययः)

यानं वस्त्र-मलङ्कारान् रत्नानि विविधानि च।
हरेयुः सहसा पापा यदि राजा न पालयेत्॥ ११
अन्ताश्चाकाल एव स्यु-र्लोकोऽयं दस्युसाद्भवेत्।
न विवाहः समाजो वा यदि राजा न पालयेत्॥ १२
त्रस्त-मुद्विग्नहृदयं हाहाभूत-मचेतनम्।
क्षणेन विनशेत् सर्व्वं यदि राजा न पालयेत्॥ १३
हस्ताद्धस्तं परिमुषेद् भिद्येरन् सर्व्वसेतवः।
भयार्त्तं विद्रवेत् सर्व्वं यदि राजा न पालयेत्॥ १४
विवृत्य हि यथाकामं गृहद्वाराणि शेरते।
मनुष्या रक्षिता राज्ञा समन्ता-दकुतोभयाः॥ १५

---

न स्यात्, अपि तु वलवत एव इदमित्येव सम्परिग्रह स्यात्। वलवान् जनो दुर्व्वलस्य धनादिकम् गृह्णीयादिति भाव। विष्वक् (सर्व्वत) लोप. (धनादीना लुम्पन), चौर्य्यमित्यर्थ.।

(११) सहसा—हठात्, वलपूर्व्वकम्।

(१२) अकाले (असमये) अन्ता (विनाशा.), परस्पर-प्रहारादिना धनप्राण-ध्वसा' इत्यर्थ.। दस्युसात्—दस्यूनामायत्त, दस्युमय वा।

(१३) हाहाभूतं—शोचनीयदशापन्नम्. कृतहाहाकार वा। विनशेत्—विनश्येत (आर्ष)।

(१४) हस्तात् हस्त परिमुषेत्—हस्त (हस्तस्थमपि धन) चौरो हरेदित्यर्थ.। सर्व्वसेतव· (सर्व्वविषया मर्य्यादा, समाजादि-बन्धनानि) भिद्येरन् (भग्ना भवेयु), सर्व्वं विशृङ्खल भवेदित्यर्थ। सर्व्व (सकलं प्राणिजात) भयार्त्त· सत् विद्रवेत (स्वस्थानात् पलायेत)।

(१५) विवृत्य—उद्घाट्य। यथाकाम—यथेच्छम्।

स्त्रियश्च पुरुषा मार्गं सर्व्वालङ्कार-भूषिताः ।
निर्भयाः प्रतिपद्यन्ते यदा रक्षति भूमिप. ॥ १६
धर्म्ममेव प्रपद्यन्ते न हिंसन्ति परस्परम् ।
अनुगृह्णन्ति चान्योन्यं यदा रक्षति भूमिपः ॥ १७
यस्याभावेन भूताना-मभाव. स्यात् समन्तत. ।
भावे च भावो नित्यं स्यात् कस्तं न प्रतिपूजयेत् ॥ १८
यस्तस्य पुरुष' पापं मनसाप्यनुचिन्तयेत् ।
असंशयमिह क्लिष्ट. प्रेत्यापि नरकं व्रजेत् ॥ १९
नहि जात्ववमन्तव्यो मनुष्य इति भूमिप. ।
महती देवता ह्येषा नररूपेण तिष्ठति ॥ २०

---

(१६) प्रतिपद्यन्ते—गच्छन्ति ।
(१७) प्रपद्यन्ते—आश्रयन्ति ।
(१८) भाव सत्ता, अस्तित्वम् ।
(१९) पाप—द्रोहम् । क्लिष्ट —प्राणवधबन्धनादिरूप-नानाक्लेश । प्रेत्य—परलोके ।
(२०) जातु—कदाचित् । अवमन्तव्य —अवज्ञेय ।

# नीतिसारः ।

आलस्यं हि मनुष्याणां शरीरस्थो महारिपुः ।
नास्त्युद्यमसमो बन्धुः कृत्वा यन्नावसीदति ॥ १ ॥

कुलीनैः सह सम्पर्कं पण्डितैः सह मित्रतां ।
ज्ञातिभिश्च समं मेलं कुर्व्वाणो न विनश्यति ॥ २ ॥

आपदां कथितः पन्था इन्द्रियाणामसंयमः ।
तज्जयः सम्पदां मार्गो येनेष्टं तेन गम्यताम् ॥ ३ ॥

श्रोत्रं श्रुतेनैव न कुण्डलेन
दानेन पाणि र्नच कङ्कणेन ।
आभाति कायः करुणापराणाम्
परोपकारेण न चन्दनेन ॥ ४ ॥

निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु
लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ।
अद्यैव वा मरणमस्तु युगान्तरे वा
न्याय्यात् पथः प्रविचलन्ति पदं न धीराः ॥ ५ ॥

सम्पूर्णम् ।

———